ॐश्रीगणेशायनमःॐश्रीगुरुदेवेशिवायोनमः
ॐश्रीगुरुंगणपंदुर्गांवटुकंशिवमच्युतं ब्रह्मा
णंगिरिजांलक्ष्मींवाणींवंदेविभूतये अनाद्याया
खिलाद्यायमायिनेगतमायिने अरूपायसरू
पायशिवाययगुरवेनमः पराप्रसादमंत्रोयस्य
स्चिदानंदतेजसे अग्निसोमस्वरूपायसाम्बिका
यनमोस्तुते श्रीदेव्युवाच भगवन्देवदेवेशपं
चकृत्यविधायक सर्वज्ञभक्तिसुलभशरणा
गतवत्सल महेश्वरपरमेशानकरुणामृतवा
रिधे असारेघोरसंसारेसर्वदुःखमलीमसे ना
नाविधशरीरस्थाह्यनंताजीवराशयः जायंतेच
म्रियंतेचतेषांमंतोनविद्यते सदादुःखातुरादेव
नसुखीविद्यतेक्वचित् केनोपायेनदेवात्रमु
च्यतेवदमेप्रभो केनोपायेनदेवेशजनाःसं
सारसागरात् येनोपायेनदेवेशतरंतिदुःख
सागरम् ईश्वरउवाच शृणुदेविप्रवक्ष्यामियन्मा
त्वंपरिपृच्छसि तस्यश्रवणमात्रेणसंसारान्मु
च्यतेनरः अस्तिदेविपरंब्रह्मस्वरूपीनिष्कलः
शिवः सर्वज्ञःसर्वकर्ताचसर्वेशोनिर्मलोद्वय
स्वयंज्योतिरनाद्यंतोनिर्विकारःपरात्परः निर्गु
णःसच्चिदानंदस्तदंशाजीवसंज्ञकाः अनाना

द्यविद्योपहतायथाग्नेर्विस्फुलिंगकौः देहा
द्युपाधिसंभिन्नास्तेकर्मभिरनादिभिः सुख
दुःखप्रदैः पुण्यपापरूपैर्नियंत्रिताः तत्तज्जा
तियुतंदेहमायुर्भोगंचकर्मजं प्रतिजन्मप्रप
द्यंतेतेषामप्यपरंपुनः सुसूक्ष्मलिंगशरीर
मामोक्षादक्षयंप्रिये स्थावराःकृमयश्चैवप
शवोनराः धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च
यथाक्रमंचतुर्विधाशरीराणिधृत्वामुक्त्वासह
स्रशः सुकृतात्माफ्रवोभूत्वाज्ञानीचेन्मोक्षमा
प्नुयात् चतुराशीतिलक्षेषुशरीरेषुशरीरिणां
नमानुष्यंविनान्यत्रतत्त्वज्ञानंलभ्यते अत्रजन्म
सहस्राणांसहस्रैरपिपार्वति कदाचिल्लभ्य
तेजंतुर्मानुष्यंपुण्यसंचयं सोपानभूतंमोक्षस्य
मानुष्यंप्राप्यदुर्लभं यस्तारयतिनात्मानंतस्मा
त्पापतरस्त्वकः नरःप्राप्येमंजन्मलब्ध्वापीन्द्रि
यसौष्ठवं नवेत्यात्महितंयस्तुसभवेद्ब्रह्मघातक
विनादेहेनकस्यापिपुरुषार्थोनविद्यते तस्माद्दे
हंधनंरक्षेत्पुण्यकर्माणिसाधयेत् रक्षयेत्सर्वदा
त्मानं मात्मासर्वस्यभाजनं रक्षयेजत्नमातिष्ठेज्जी
वभद्राणीपश्यति पुनःग्रामःपुनःक्षेत्रंपुनःवित्तं
पुनर्गृहं पुनःशुभाशुभंकर्मनशरीरंपुनःपुनः
शरीररक्षणोपायःकर्तव्यःसर्वदाबुधैः नच्छंति
वपुस्त्यागमपिकुष्ठादिरोगिणः तत्रोपितस्य

२ ह्रुर्मार्थंधर्मज्ञानार्थमेवच ज्ञानेनतुध्यानयोग
र्थमचिरात्प्रविमुच्यते आत्मैवयदिनात्मान
महितेभ्यो निवारयेत् कोन्योहितकरस्तस्मादा
2 त्मानंतारयिष्यति इहैवनरकव्याधेश्चिकित्सां
न[illegible]करोतियः गत्वानिरौषधंदेशंव्याधि
स्थःकिंकरिष्यति यावत्तिष्ठतिदेहोयंतावत्त
त्वंसमभ्यसेत् संदीप्तेभवनेकोनकूपंखनति
दुर्मतिः व्याघ्रीवास्तेजराचायुर्यातिभिन्नघटा
म्बुवत् निघ्नंतिरिपुवद्रोगास्तस्माच्छ्रेयःसमभ्य
सेत् कालोनज्ञायतेनानाकार्यैःसंसारसंभवैः
सुखदुःखैर्जनोहंतिनवेत्तिहितमात्मनः जाता
नार्त्तान्मृतानापद्ग्रस्तान् दृष्ट्वाचदुःखितान् लो
कोमोहसुरांपीत्वानबिभेतिकदाचन संपदःस्व
प्नसंकाशायौवनंकुसुमोपमम् तडिच्चपल
मायुष्यंकस्यस्याज्ज्ञानतोधृतिः शतंजीवनम
त्यल्पंनिद्रालस्यैस्तदर्धकं बाल्यरोगजरादुःखै
रल्पंतदपिनिष्फलम् प्रारब्धव्येनिरुद्योगोजा
गर्तव्येप्रसुप्तकः विश्वस्तव्येभयस्थानेहानरः
कोनहन्यते तोयफेनसमेदेहेजीवेक्रमवेशा
स्थिते अनित्यप्रियसंवासेकथंतिष्ठतिनिर्भयः
अहितेहितसंज्ञःस्यादध्रुवेध्रुवचिंतकः अनर्थे
चार्थविज्ञानिस्वमर्थंवेत्तियोनसः पश्यन्नपि
प्रस्खलतिशृण्वन्नपिनबुध्यति पठन्नपिनजा

नातिदेवमायाविमोहिताः सतिमज्जजगदिदं
गंभीरेकालसागरे म्रत्युरोगजराग्राहैर्नकश्चि
दपिबुध्यति प्रतिक्षणमयंकालःक्षीयमाणेनल
क्ष्यते आमकुम्भइवाम्भस्थविशीर्णश्चविभाव्यते
युज्यतेविघटनेवायोराकाशस्यापिखंडनं ग्रथ्यतेच
तरंगानामस्यनाशुमपियुज्यते पृथिवीदह्यतेयेनमे
रुश्चापिविशीर्य्यते शुष्यतेसागरजलंशरीरेदेवि
काकथा अपत्यमेकलत्रंमेधनंमेबांधवाश्चमे
जल्पंतमितिमर्त्यान्तं हंतिकालवृकोबलात् इदं
कृतमिदंकार्यमिदमन्यत्कृतानाकृतं पूर्वमेहासे
मायुक्तंम्रत्युरत्तिनरंप्रिये श्वःकार्यमद्यकुर्वीत
पूर्वाह्नेचापराह्णिकं नहिम्रत्युप्रतीक्षेतकृतंवाने
नृप्यवाकृतं जरा ... नपंथानंप्रचंडंव्याधिसैनि
कं मित्रशत्रुमथिष्ठोसिज्ञातारंकिंनपश्यसि त्वमाह
चीविनिर्भिन्नंसिक्तंविषवसर्पिषा रागद्वेषानलेप
क्वंम्रत्युरश्नातिमानवं बालांश्चयौवनस्थांश्चवृद्धा
न्गर्भगतानपि सर्वानाविशतेम्रत्युरेवंभूतमिदं
जगत् ब्रह्मविष्णुमहेशादिदेवताभूतजातयः ना
शमेवानुधावंतितस्माच्छ्रेयःसमभ्यसेत् स्वस्वव
र्णाश्रमाचारलंघनानदुष्प्रतिग्रहान् परस्त्रीध
यनकामान्नून्नणामायुर्क्षयोभवेत् वेदशास्त्रा
द्यनभ्यासात्तथैवगुरुवंचनात् नृणामायुःक्ष

२
3

योभूयादिंद्रियाणामनिग्रहात् व्याधिराधिवि
शेषास्त्वत्रशार्दूलपशवोमृगाः निर्वाणंयेननि
र्दिष्टंतेनगच्छंतिजंतवः जीवस्तृणजलौका
वद्देहान्तरमनुव्रजेत् संप्राप्यचोत्तरांशेनदे
हंत्यजतिपूर्वकं बाल्ययौवनवृद्धत्वंयथागेहा
वरादिकं तथादेहांतरप्राप्तिगृहाद्गृहमिवाग
ते ज्ञाताः कृतैर्दृढकर्माणिसुखदुःखोपभुंजते
परत्राज्ञानिनोदेवियात्यायांतिपुनःपुनः इह
यत्क्रियतेकर्मतत्परत्रोपभुज्यते सिक्तमूले
स्यवृक्षस्यफलंशाखासुदृश्यते दारिद्र्यदुःख
रोगाश्चबंधनंव्यसनानिवा आत्मापराधवृक्षा
णांफलान्येतानिदेहिनां निःसंगएवमोक्षःस्या
द्दोषाःसर्वेपिसंगताः संगात्पतत्यधोज्ञानीचा
वश्यंपकिमुताल्पवित् संगसर्वात्मनात्याज्यः
सचेत्यक्तुंनशक्यते महद्भिसंगःकर्तव्याःसतः
संगस्यभेषजं सत्संगश्चविवेकश्चनिर्मलनय
नद्वयं यस्यनास्तिनरःसोंधःकथंनस्यादमार्ग
गः यावंतःकुर्वतेजंतुःसंबंधात्मनसःप्रियान्
तावंतोस्यनिखन्यंतेहृदयशोकशंकवः स्व
देहमपिजीवोयंमुक्त्वायातिकुलेश्वरि स्त्रीमा
तृपितृपुत्रादिसंबंधकेनहेतुना दुःखमूल
हिसंसारःसयस्यास्तिसदुःखितः तस्यत्यागःकृ

तोयेन सस्तुखी नापरः प्रिये भ्रमवं सर्वदुःखा
नामालये सकलापदां निलये सर्वपापानां
संसारं वर्जयेत्प्रिये अखंडं बंधने घोरमेखी
कृत्यमहाविषं अशास्त्रखंडने देवि संसारास
क्तचेतसो नेष्टुडःखि सर्वमिदं यतः ........
....... तस्मात्संत्यज्य संसारं तत्वनिष्ठः सु
खीभवेत् स्त्रीधनादिषु संसक्तो मुच्यते न कदा
चन कुटुंबचिंतायुक्तस्य कृतसत्यादयो गुणाः
अपक्वे भुज्यमानस्य नश्यंत्यंगानि तेन हि वं
चिंताशेषचिंतैस्तैर्नित्यं लोको विनाशितः हाहं
तविषयाहारै देहस्थो द्रियतस्करैः मांसलुब्धो य
थामत्स्यो लोहशंकेन पश्यति सुखलुब्धस्तथा
देहीयमबाधां न पश्यति हिताहितं न जानंति
नित्यमुन्मार्गगामिनः कुक्षिपूरणनिष्ठा ये ते
बुधा नारकाः प्रिये निद्रादिमैथुनाहाराः सर्वे
षां प्राणिनां समाः ज्ञानवान्मानवः प्रोक्तो ज्ञानः
पशुः प्रिये प्रभाते मलमूत्राभ्यां क्षुत्तृड्भ्यां मध्यगे
रवौ रात्रौ मदननिद्राभ्यां बाध्यते मानवः प्रिये
स्वदेहधर्मरागादिनिरताः सर्वजंतवः जायं
ते च व्रियंते च हाहंता ज्ञानमोहिताः स्वस्ववर्ण
श्रमाचारनिरताः सर्वमानवाः न जानंति परं त
त्त्वं व्यर्था नश्यंति पार्वति क्रियापाशपराः केचित्

४ तचर्यादिसंयुताः अज्ञानसंवृतात्मानः संचरं
तिप्रतारकाः नाममात्रेण संतुष्टाः कर्मकाण्ड
5 रतानराः मंत्रोच्चारणहोमाद्यैः भ्रामिताक्रतु
विस्तरैः एकभुक्तोपवासाद्यैः नियमैः कायशो
षणैः मूढाः परोक्षमिच्छंति तव मायाविमोहि
ताः देहदंडनमात्रेण कामुक्तिरविवेकिनां व
ल्मिकताडनादेव मृतः कुत्र महोरगः जटा
भारयुतैर्युक्ताः दाम्भिकाभेषधारिणः भ्रमं
तिज्ञानवल्लोके भ्रामयंति जनांप्रिये संसार
जसुखासक्तं ब्रह्मज्ञोस्मीति वादिनं कर्मब्र
ह्मोभयभ्रष्टं तं त्यजेदंत्यजे यथा गृहारण्यस
मालोके गतव्रीडा दिगंबराः चरंति गर्दभाद्या
श्च तिरक्तास्ते भवंति किम् मृद्भस्मोद्धूलनादे
व मुक्ताः सर्वादिमानवाः मृद्भस्माद्धानित्य
स्थस्य किं मुक्तो भविष्यति शीतवातातपसहा
भक्ष्याभक्ष्यसमाः प्रिये तिष्ठंति शूकराद्याश्च
ज्ञानिनस्ते भवंति किम् तृणपर्णोदकाहारा
सततं वनवासिनः हरिणादिमृगा देवि ता
पसास्ते भवंति किं आजन्ममरणांतं च गंगा
दितटनः स्थिताः मण्डूकामप्रमुखाव्रतिन
स्ते भवंति किं पारावताः शिलाहाराः परमे
स्वरिचातकाः न पिबंति महीतोयं योगिनस्ते

भवेति किं तस्मादित्यादि कं कर्म लोकरंजन
कारकं मोक्षस्य कारणं ज्ञानात् तत्त्वज्ञानं कुले
श्वरि षट्दर्शनमहाकूपे पतिताः पशवः प्रि
ये परमार्थं न जानंति पशुपाशेन यंत्रिताः वे
दशास्त्राणि वेद्योरेऽस्समानाऽतस्ततः षडूर्मि
निग्रहग्रस्ता तिष्ठंति हि कुतर्किकाः वेदाग
मपुराणज्ञाः परमार्थं न वेत्ति यः विडंवकस्य
तस्यैव तत्सर्वं काकभाषितं इदं ज्ञानमिदं ज्ञे
यमिति चिंतासमाकुलाः पठंत्यहर्निशं देवि
परतत्त्वपराङ्मुखाः वाक्यछंदोनिषेधेन का
व्यालंकारशोभिताः चिंतयाऽदुःखिता मूढा ति
ष्ठंति व्याकुलेंद्रियाः अन्यथा परमं तत्त्वं जनाः क्लि
श्यंति चान्यथा अन्यथा शास्त्रसद्भावं व्याख्यां कु
र्वंति चान्यथा कथयंत्युन्मनीभावं स्वयं वाऽनुभ
वंति च अहंकाररताः केचिदुपदेशादिवर्जिताः
पठंति वेदशास्त्राणि बोधयंति परस्परं न जानं
ति परं तत्त्वं दर्वी पाकरसं यथा शिरो वहति पु
ष्पाणि गंधं जिघ्रति नासिका पठंति वेदशास्त्रा
णि दुर्लभो भावबोधकः तत्त्वमस्य मज्ञात्वा मूढा
शास्त्रेषु मुह्यति गोपः कुक्षिगते च्छागे कूपे प
श्यति दुर्मतिः संसारमोहनाशाय शाब्दबोधो न
हि क्षमः न निवर्तेत तिमिरं कदाचिद्दीपवार्तया

५ 5

प्राज्ञाहीनस्यपाठानेमंधस्यदर्पणंयथा देविश्र
ज्ञावतःशास्त्रंतत्वज्ञानस्यसाधने ९ अग्रतःपृष्ट
तःकेचित्पार्श्वयोरितिकेचन तत्वमीदृक्तादृगि
तिविवदंविपरस्परं सद्विद्यादानशौर्याद्यैर्गुणै
र्विख्यातमानवः ईदृशस्तादृशश्चेतिदूरतःक
थ्यतेजनैः प्रतत्वग्रहणंनास्तिवार्तयाग्रहणे
श्रिये एवंयेशास्त्रसंमूढाहृदस्यातेनसंशयः
इदंज्ञानमिदंज्ञेयंसर्वंतच्छ्रोतुमिच्छति दिव्यव
र्षसहस्रायुःशास्त्रांतंनैवगच्छति विद्यान्यने
कशास्त्राणिस्वल्पाविघ्नकोटयः तस्मात्सारं
विजानीयात्क्षीरंहंसमिवांभसि अभ्यस्यवेद
शास्त्राणितत्वज्ञानार्थंबुद्धिमान् पलालमिव
धान्यार्थीसर्वशास्त्राणिसंत्यजेत् यथामृते
नतृप्तस्यनाहारेनप्रयोजनं तत्वज्ञस्यतथादे
विनशास्त्रेणप्रयोजनं नवेदाध्ययनान्मुक्तिर्न
शास्त्रपठनादपि ज्ञानादेवहिकैवल्यंनान्यथा
वीरवंदिते नाश्रमःकारणंमुक्तेर्दर्शनानिनका
रणं तथैवसर्वकर्माणिज्ञानमेवहिकारणं मु
क्तिदागुरुवाविद्याविद्याःसर्वाविडंबकाः का
ष्ठभारसहस्रेषुएकंसंजीवनंपरं अद्वैतंहिशि
वेप्रोक्तंक्रियासर्वविवर्जितं गुरुवक्त्रेणलभ्येत
नाधीतेगमकोटिभिः आगमोक्त्याविवेकोत्थद्विधा

ज्ञानंप्रवर्त्तते शब्दब्रह्मागममयंपरंब्रह्मविवेकजं
अद्वैतंकेचिदिच्छंति द्वैतमिच्छंतिचापरे समंतत्त्वं
नजानंति द्वैताद्वैतविवर्जितं द्वेपदेबंधमोक्षाय
नममेतिममेतिच ममेतिबध्यतेजंतुर्नममेति
प्रमुच्यते तत्कर्मयत्रबंधायसाविद्याविमुक्तिदा
आयासायापरंकर्मविद्यान्याशिल्पनैपुणं याव
त्कर्माणिदीप्यंतेतावत्संसारवासना यावदिंद्रिय
चापल्यंतावत्तत्वकथाकुतः तावत्प्रयत्नवेगोस्ति
तावत्संकल्पकल्पना यावन्नभीमनसःस्थैर्यंता
वत्तत्वकथाकुतः यावद्देहाभिमानंचममताया
वदेवहि यावन्नगुरुकारुण्यंतावत्तत्वकथाकुतः
तावत्तपोव्रततीर्थजपहोमार्चनादिकं वेदशा
स्त्रागमकथायावत्तत्वनविंदति तस्मात्सर्वप्र
यत्नेनसर्वावस्थासुसर्वदा तत्वनिष्ठोभवेद्दे
वियदिच्छेत्मोक्षमात्मनः धर्मज्ञानप्रसूतस्य
स्वर्गभोगफलस्यच तापयादिसंतप्तःछायांमोक्ष
तरोश्रयेत् बहुनात्रकिमुक्तेनरहस्यंशृणुपार्वति
कुलमार्गादृतेमुक्तिर्नास्तिसत्यंनसंशयः तस्मा
त्कुलार्थतत्वंहिविज्ञेयंश्रीगुरोर्मुखात् स्वविनमु
च्यतेजंतुःघोरसंसारबंधनात् इतितेकथितंकिं
चित्जीवजातिंप्रिये समासेनकुलेशानिकिंभूयः
श्रोतुमिच्छसि १३· इतिश्रीकुलार्णवेमहारहस्ये

९ सर्वागमोत्तमेजीवस्थितिकथनेनामप्रथमो
ल्लासः। समाप्तम् शुभम्॥

6

ॐ श्रीगणेशायनमः ॐ मानसीपूजालिख्यते
ॐ नमः सरस्वत्यै ॐ उषसिमागधमंगलगाय
नैः झटितिजागृहीजागृहीजागृही अति
कृपार्द्रकटाक्षनिरीक्षणैर्जगदिदंजगदंबसु
खीकुरु कनककलशशोभमानशीर्षजलधर
लंबिसमुल्लसत्पताकं भगवतितवसन्निधा
नहेतोर्मणिमयमंदिरमेतदर्पयामि २ कन
कमयवितर्दिशोभने दिशिदिशिपूर्णसुवर्ण
कुंभयुक्ते मणिमयमंडपमध्यमेहि मातर्म
यिकृपयाशुसमर्चनंगृहाण ३ तपनीयम
यीसतूलिकाकमनीयामृदुलोत्तरच्छदा नवर
त्नविभूषितामयाशिबिकेयंजगदंबतेर्पिता ४
कनकमयवितर्दिस्थापितेतूलिकाढ्येविविध
कुसुमकीर्णेकोटिबालार्कवर्णे भगवतिरम
णीयेरत्नसिंहासनेस्मिन्नुपविशपदयुग्मंहेमपी
ठेनिधेहि ५ मणिमौक्तिकनिर्मितंमहांतंकनकस्तंभ
चतुष्टयेनयुक्तं कमनीयतमंभवानिछत्रंनव
मुल्लोचमहंसमर्पयामि ६ दूर्वयासरसिजान्वि
तविष्णुक्रांतयाचसहितंकुसुमाढ्यम् पद्मयुग
सदृशेपदयुग्मेपाद्यमेतदुररीकुरुमातः ७ गं
धपुष्पयवसर्षपदूर्वासंयुततिलकुशाक्षतमि
श्रम् हेमपात्रनिहितंसहरत्नैरर्घ्यमेतदुररीकुरु

१ मा॰ पू॰ ८

7

मातः ८ जलधरद्युतिनागपुष्पजातिफलक
कोललवङ्गगंधयुक्तैः अमृतैरमृतैरिवाति
शीतैर्भगवत्याचमनं विधीयताम् ९ निहितं र
त्नपिधानकेन तत् तदिदं देवि करे समर्पितम्
मधुपर्कं जननि प्रगृह्यताम् १० एतच्चम्पक
तैलमेव विविधैः पुष्पैर्मुदा वासितं त्वत्कर
त्नमये सुवर्णचषके ऽङ्गे ऽम्ब मह्यर्हितम् स्नान
न्दं स्वरसुंदराभिरभितो हस्ते धृतं तन्मया केश
षु भ्रमरभ्रमेषु सकलेष्वङ्गेषु चालेपितम् ११ मा
तः कुङ्कुमसङ्ग-निर्मितमिदं देहे तवोद्वर्तनं भ
क्त्याहं कलयामि हेमरजसा संमिश्रितं केशरैः
कृष्णाभिमलौ विशोध्य विलसत्कस्तूरिकोचा
नन्वितैः स्नानं ते नवरत्नकुम्भसहितैः संभा
वितोष्णोदकैः १२ दधिदुग्धघृतैः समाक्षिकैः
सितया शर्करया समन्वितैः स्नपयामित
वाहमादृतो जननीवां पुरतो सुवारिभिः १३
एलोशीरसुवासितैः सकुसुमैर्गंगादितीर्थो
दकैः माणिक्यामृतमौक्तिकामृतमयैः स्वच्छैः
सुवर्णोदकैः मंत्रान्वैदिकतान्त्रिकान्परिप
ठन्सानन्दमत्यादरात् स्नानं ते परिकल्पया
मि जननि स्नेहात्वमंगीकुरु १४ बालार्कद्यु
तिदाडिमीयकुसुमैः प्रस्पर्द्धि सर्वोत्तमम् मा

तस्त्वं परिदेहि दिव्यवसनं भक्त्या मया कल्पितम्
मुक्तौघैर्ग्रथितं च कंचुकमिदं स्वीकृत्य पीतप्रभ
न्तप्तस्वर्णसमानवर्णमतुलं प्रावर्णमंगीकुरु १५
नवरत्नयुतैर्मयार्पितैः कमनीयैस्तपनीयपादु
के सविलासमिदं पदद्वये कृपया देवि तयोर्नि
धीयतां १६ बहुभिरगरुधूपैः सादरं धूपयित्वा
भगवति तव केशाः कंकतैर्मार्जयित्वा सुरभिभि
ररविन्दैश्चंपकैश्चार्चयित्वा झटिति कनकसू
त्रैर्जूटयन्वेष्टयामि १७ सौवीराञ्जनमिदमंब च
क्षुषोस्ते व्यन्यस्तं कनकशलाकया मया यत् तन्न
नं मलिनमपि त्वदक्षिसङ्ग-ब्रह्मेन्द्राद्यभिरभिलषितांक्षे
नेत्रैर्यैः १८ मञ्जीरे पदयोर्निधाय रुचिरौ विन्यस्य
काञ्चीं कटौ मुक्ताहारमुरोजयोरनुपमं नक्षत्रमालां
गले केयूराणि भुजेषु रत्नवलयश्रेणीं करेषु क्रमा
त् ताटंके तव कर्णयोर्विनिदधे शीर्षे च चूडामणि
म् १९ धम्मिल्ले तव देवि हेमकुसुमान्याधाय भा
लस्थले मुक्ताहारविराजिहेमतिलकं नासापुटे मौक्ति
कं मातर्मौक्तिकजालिकां च कुचयोः सर्वांगुलीषू
र्मिकाः कट्यां कांचनकिंकिणीर्विनिदधे रत्नाव
तंसौ शुभाम् २० मातर्भालतले तवातिविमले का
श्मीरकस्तूरिका कर्पूरागरुभिः करोमि तिलकं
देहेऽङ्गरागं ततः वक्षोजादिषु यक्षकर्दमरसं सि

२

८ क्ताच स्रग्धद्रैवैः पादोङ्कुमलेपनादिभिरहं सं
पूजयामिक्रमात् २१ रत्नालते त्वां परिपूजयामि
मुक्ताफलैर्वा रचितैः पराध्यैः अखण्डितैर्दिवियवा
दिभि र्वाकाश्मीरपङ्काकिततंडुलैर्वा २२ जन
निचंपकैस्तैलमिदं मृगोमदमदोद्भवमये पु
टवासितं सुरभिगंधमिदंच कृतं समस्तपदि
सर्वमिदंप्रतिगृह्यताम् २३ सीमंतेते भगवति
मंयाप्रसादरंत्यस्तमेतत् सिंदूरं मे हृदयकमले
हर्षवर्षतनोतु बालार्कस्यद्युतिरिसदालोहिता
यस्यकांति रंतर्ध्वांतं हरतु सकलं चेतसा चिंतया
मि २४ मंदारकुंदकरवीरलवङ्गपुष्पै स्त्वांदेवि सं
ततमहं परिपूजयामि जातीजपावकुलचंपकके
तकादि नानाविधानि कुसुमानि चतेर्पयामि २५
मालतीबकुलहेमपुष्पिका कांचनारकरवीरके
तकैः कर्णिकारगिरिमल्लिकादिभिः पूजया
मिजगदंबतेवपुः २६ पारिजातशतपत्रपाटलै
मल्लिकाबकुलचंपकादिभिः अंबुजादिकुसुमै
श्वप्रसादरं पूजयामिजगदंबतेवपुः २७ लाक्षासं
मिलितैः सिताभ्रसहितैः श्रीवाससंमिश्रितैः सि
तामधुयुतैः गोसर्पिषालोडितैः श्रीखंडेपुरुगुग्गु
लप्रभृतिभिः नानाविधैः वस्तुभिः धूपंतेपरियामि
जननितंधूपमंगीकुरु २८ रत्नालंकृतहेमपात्र
निहितैगोसर्पिषाद्यान्वितैः दीर्घेर्दीपितरान्धकार

विधुरैर्वालार्ककोटिप्रभैः आताम्रोज्ज्वलज्ज्व
लस्तुविलसद्रत्नप्रदीपैः सदामातस्त्वामह
मादरादनुदिनंनीराजयाम्युच्चकैः २९ मह
तिकनपात्रेस्थापयित्वाविशालात् डमरुप
टिसनूपान्पक्वगोधूमदी वज्रहुतमधिते
नुत्यस्यचित्यस्यकल्पान् भुवनजननिकुर्वे
नित्यमारात्रिकान्ते ३० सविनयमथदत्वाजानु
युग्मंधरण्यांसपदिशिरसिधृत्वापात्रमारात्रिक
स्य मुखकमलसमीपेतेम्बसार्धत्रिवारं भ्र
मयतिमयिभूयात्तेकृपार्द्रःकटाक्षः ३१ मात
स्त्वांदधिदुग्धपायसमहाशाल्यन्नसंतानिकान्
सूपापूपसिताघृतैस्सवटकैःसक्षौद्ररंभाफलैः
एलाजीरकहिंगुनागरनिशाकौस्तुंबरीसंस्कृतैः
शाकैःपाकमहंसुधाधिकरसैःसंतर्पयामम्बि
के ३२ सपूपसूपदधिदुग्धसिताघृतानि सुखा
दुभक्तपरमान्नपुरस्सराणि सकोलसन्नमरि
चजीरकवाह्लिकानिमंदृपानिभुञ्जजगदंबम
यार्पितानि ३३ क्षीरसारदधिचोत्तमोत्तमंप्राज्य
माज्यमिदमुज्ज्वलंमधुः मातरेतरेतदमृतोपमं
त्वयासंभ्रमेणपरिपीयतांमुहुः ३४ उष्णोदकैः
पाणियुगंमुखंचप्रक्षाल्यमातःकलधौतपात्रम्
कर्पूरमिश्रेणसकुंकुमेनहृद्यैस्समुद्वर्तयचंद
नेन ३५ अतीशीलमुशीरवासितंतपनीयाप

९ वनेनिवेदितं पटपूतमिदं जीतामृतं शुचिगं
गाजलपीयतां ३६ ताम्राम्बरंभाफलसंयुतानि
द्राक्षाफलालोचसमन्वितानि सनारिके
लानि सदाडिमानि फलानि ते देवि समर्पयामि
३७ कलिंगकोशातसंयुतनिंजवीरनारंगसम
न्वितानि सबीजपूरानि सजांववाणिफला० ३८
कर्पूरेण युतैर्लवंगसहितैः कंकोलचूर्णा
न्वितैः स्वाद्वक्रमुकैः सगौरखदिरैः सुस्नि
धजातिफलसानंदं सुखमंडनार्थं मतुलं तां
बूलमंगीकुरु ३९ एलालवंगादिसमन्विता
नि कंकोलकर्पूरविमिश्रितानि तांबूलव
ल्लिदलसंयुतानि पूगानि ते देवि समर्पयामि
४० तांबूलवल्लिनिर्जितहेमवर्ण स्वर्णाक्तपू
गफलमौक्तिकचूर्णयुक्तं रत्नौकसंस्थित
मिदं खदिरेण सार्धं तांबूलमंब वदनांबुरुहे
गृहाण ४१ अच्छवज्रमणिमिश्रमौक्तिकैस्ला
विकीर्य त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः
विविधसुक्तादिव्यमाणिक्ययुक्तां जननि कन
कवृष्टिं दक्षिणां तेर्पयामि ४२ मानकांचनदंड
मंडितमिदं पूर्णेंदुविबप्रभम् नानारत्नविशो
भिहेमकलशं लोकत्रयाह्लादकं मानमौक्ति
कजालकोपरिवृतं प्रीत्यात्महस्ते धृतं छत्रं ते प
रिकल्पयाम्यशिशिरसितयष्टास्वर्णनिर्मितं ४३ शा

रदिंदुमरीचिगौरवर्णैर्मणिमुक्ताविलसत्सु
वर्णदंडैः जगदंबविचित्रचामरैस्त्वामहमा
नंदभरस्तुवीजयामि ४४ मार्तंडमंडलनि
भोजगदंबयोयं भक्त्यामयामणिमयोमुक
रोर्पितस्ते पूर्णेंदुबिंबरुचिरंवदनंस्वकीयंत
स्मिन्विलोकयविलोलविलोचनत्वं ४५ इंदा
दिभिर्नतिनतोत्तमकेषुसप्तदीप्तं नीराजयंतिस
ततंतवपादपीठं तस्मादहंतवसमस्तशरी
रमेतन्नीराजयाजगदंबशिवेभवानि ४६ प्रि
यगतिरतितुंगोरत्नपल्याणयुक्तः कनकम
यविभूषस्निग्धगंभीरघोषः भगवतिकलि
तोयंवाहनार्थंमयाते तुरगशतसमेतोवायुवे
गस्तुरंगः ४७ मधुकरवृतगुंजन्यस्तसिंदूररेणुः
कनककलितघंटः किंकिणीशोभिकंठः स्रव
णयुगलचलच्चामरमेघतुल्यो जननितवमुदेस्या
न्मत्तमातंगएषः ४८ द्रुततरतुरंगैर्विराजमाने
मणिमयचक्रचतुष्टयेनयुक्ते कनकमयमहं
वितानवंतंभगवतितेहिरथंसमर्पयामि ४९
शतपत्रयुतैःस्वभावशीतैरतिसौरभ्ययुतैःपरा
गपीतैः भ्रमरैर्मुखरीकृतैर्वहंतैर्व्यजनैस्त्वांज
गदंबवीजयामि ५० परिखीकृतसप्तसागरंबहु
संपत्सहितंमयाहितेविपुलंधरणीदलाभियंत्र
वलेडुगीमिदंसमर्पयामि ५१ हयरथगजपत्तिशा

भ्रमानंदिशि दिशिडुंडुभिमेघनादयुक्तं गति
बहुलतरंगेसैन्यमेतद्भगवतिभक्तिभरेणतर्प
यामि ५२ भ्रमविस्खलितलोलकुंतलालिविग
लितमाल्यविकीर्णरंगभूमिः इयमतिरुचिरान
ह्वीनटीतवहृदयेमुदमातनोमातः ५३ मुख
कमलविलासलोलवेणीविलसितनिर्जितलो
लभृंगमालाः सुरजनसुखकारिचारुलीला
भगवतितेपुरतोस्तुनटनिबालाः ५४ रुचिरकु
चतटीनानाट्यकालेनटीनां प्रतिरटहमथत
त्रप्रत्यहंप्राडुरासन् धिमिकिधिमिकिधिंधिं
धेंडुधेंधेंडुधेंधे थ्रगतिथ्रगतिथेथेतातथेथेति
शब्दाः ५५ चरणकमलयुग्मेचंपकेपूजयित्वा शि
रसिविनिहितोयंरत्नपुष्पांजलिस्ते कनककम
लमालाकंठदेशेर्पयित्वा हृदयकमलमध्येदेवि
हर्षितनोतु ५६ भ्रमदलिकुलवेणीलोलधम्मिल्ल
भारा स्मितमुखकमलोच्चादिव्यलावण्यपूरा त्रि
भुवनमितसुवेषावारयोषानटंति परमतनकलंक
हादेविमोदंतनोतु ५७ डमरुडिंडिमकर्करफ
ल्लरीमधुरवाद्यघंटाटघंटादयः कडितिकाहलति
भिर्जगदंबिकेसुखकरंसुहृदयंसुखयंतुते ५८ वि
पंचीषुसप्तस्वरान्वादयंत्यस्तवद्वारिगायंतिगं
धर्वकन्याः क्षणंसावधानेनचित्तेनमातःसमा
कर्णयात्वमयाप्रार्थितोसि ५९ अभिनवकमनी
येनर्तकैनर्तकीनां क्षणमपरमथित्वाचेवएव

त्वदीयं स्तवमंहिमविचित्रैस्तत्पवादित्रगीतै
र्भगवति भवदीयं मानसं रंजयामि ९० तव
देवि गुणानुवर्णने चतुरानननादयः तदिहै
कमुखेन जन्तुषु स्तवनं कस्तव कर्तुमीश्वरः
९१ पदे पदे या परिपूजकेभ्यः सद्योश्वमेधा
दिफलं ददाति तां सर्वपापक्षयहेतुभूतां प्र
दक्षिणां ते परितः करोमि ९२ रक्तोत्पलार
क्तलताप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशांकि
ताभ्यां अशेषवृंदारकवंदिताभ्यां नमो भवा
नीपदपंकजाभ्यां ९३ अथ मणिमयमंचका
भिरामे श्रुतिमतिपुष्पनराजमाने प्रसरदगु
रुधूपधूपितेस्मिन् भगवति वासगेहेनि
वास एषः ९४ एतस्मिन्मणिखचिते सुवर्ण
पीठे त्रैलोक्याभयवरदे निधाय पादौ विस्ती
र्णेमृदुलतरोत्तरच्छदेस्मिन्पर्यंके कनकम
येनिषीद मातः ९५ तव देवि सरोजचिह्नयो
पाददयोर्निर्जितपद्मरागयोः अतिरक्तत
रैरलक्तकैः अतिपुनरुक्तां रचयामि रक्तता
९६ अतिशीतमुशीरवासितं निज तांबूलर
सरंजितं तपनीयमये हि पात्रके सुखं ग
डूषजलं निधीयतां ९७ तणमण्यजगदंब
मंचकेस्मिन्मृदुतरतूलिकया विराजमाने

अतिरहसिमुदा शिवेन सार्धं सुखशयनेकु
रुमाहृदिस्मरंति ६८ मुक्ताकुंदेंदुगौरां म
णिमयमुकटांरत्नताटंकयुक्तां मक्षस्र
पुष्पहस्तामभयवरकरांचंद्रचूडांत्रिनेत्रा
नानालंकारयुक्तांस्फटिकमयमणिद्यो
तितस्वर्णपीठेसाने दासप्रसन्नांत्रिभुवन
जननीचेतसाचिंतयामि ६९ एषाभक्त्या
तवविरचितायामयादेविपूजा स्वीकृत्ये
मांसपदिसकलान्मेपराधान्क्षमस्वन्यूनं
यत्तत्तवकरुणयापूर्णतामेतुमातः साने
दंमेहृदयकमलेतेस्तुनित्यंनिवासः ७०
पूजामिमांपठेत्प्रातःपूजाकर्तुमनीश्वरः
पूजाफलमवाप्नोतिवांछितार्थंविंदति ७१
प्रत्यहंभक्तिसंयुक्तोयःपूजनमिदंपठेत्
वाग्वादिन्याःप्रसादेनवत्सरात्सकविर्भवे
त् ७२ इतिश्रीमानसीपूजासमाप्ता शुभम्